मन्त्रयन् सविषादमास्ते तद्ध्रुवमेव विलासितमत्र कुसुम-शायकेन । तन्माधवीगुच्छान्तरिता शृणोमीत्यात्मानमपवार्य स्थिता ।

( ततः प्रविशति मदनावस्थां नाटयन् विदषकेन सहालपन् कृष्णः ॥१॥ )

मद—( स्वगतम् ) मालवरागेण ।

बदनमिदं विधुमण्डलमधुरं विधुरं वत सुचिरेण ।
कलयदनङ्गशराहतिमनिशं मलिनमिवेन्दुकरेण ॥
माधववपुरति खेदम् ।
जनयति चेतसि शतधा भेदम् ॥ध्रु०॥
परिहृतहारं हृदयमुदारं धूसरितं विरहेण ।
मरकतशैलशिलातलमाहतमहह किमिन्दुकरेण ॥
गजपतिरुद्रं सुकृतसमुद्रं शशिकिरणादपि शीतम् ।
रामानन्दरायकविभणितं सुखयतु रुचिरं गीतम् ॥२॥

कृष्णः—सा चेदुत्पललोचना सहचरीवक्त्रेण मे निर्भरं
प्रेमाणं प्रकटी चकार तदयं हासो मया कल्पितः ।
हाहा शुक्तिधिया महार्घमणिरभूत् त्यक्तो मया दैवतो
यायाल्लोचनगोचरं पुनरियं पुण्यैरगण्यैर्मम ॥३॥

---

चन्द्रमण्डलादपि मधुरं । बिधुरं म्लानं । चन्द्रकिरणाहति कलयत्प्राप्नुवत पद्मं यथा बिधुरं तद्वत् । अतिखेदं दुःखयुक्तम् । परिहृतस्त्यक्तः । ईषत् पाण्डुरस्तु धूषर इत्यमरः ॥ २ ॥

बिदू–भो वअस्स भणिदं जेव्व मए 'मा एसा अणुराइणी परिहरीअदु' त्ति एण्हिं कीस उत्तम्मसि ? भोअणेच्छाए निउत्ताए लड्डुअ–मोदएहिं किं कादव्वं ता एत्थ अहं जेव्व उबाओ ॥४॥

कृष्ण:–कथमिव ?

बिदू–अहं बह्मणो मन्तं आवटिअ आवटिअ इमं आअड्ढइस्सम् ॥५॥

कृष्णः–ज्ञातं ते ब्राह्मण्यं तदाकलय मदनिकाम् ॥६॥

( प्रविश्य )

मदनिका—स्वस्ति वत्साय ॥७॥

कृष्णः—(पुरतोऽवलोक्य) कथमियं मदनिका ( सप्रश्रयम् ) देवि ! स्वागतं ते ? ॥८॥

मद—(सस्मितम्) महाभाग मुखचन्द्रदर्शनेन ॥६॥

बिदू–कुसुमशरव्वथिदो अम्हाणं पिअवअस्सो, ता आणीअदु सा जेव्व गोवकुमारिआ ॥१०॥

---

भावप्रधाननिर्द्देशात् गोचरत्वमित्यर्थः ॥ ३ ॥

भो वयस्य भणितमेव मया एषा अनुरागिणी परिह्रियतामिति । इदानीं कस्माद्धुत्ताम्यसि । भोजनेच्छायां निवृत्तायां लड्डुकमोदकैः किं कर्त्तव्यं तदत्राहमेवोपायः ॥ ४ ॥

अहं ब्राह्मणो मन्त्रमावर्त्य आवर्त्य इमामाकर्षयिष्यामि ॥५॥

कुसुमशरव्यथितोऽस्माकं प्रियवयस्यस्तस्मादानीयतां सा

कृष्णः- (सलज्जम्) धिङ् मूर्ख ? मैवं भण ।।११।।

विदू-अह्मे वह्मणा उज्जुआ फुडं जेव्व भणामो ।।१२।।

मद-(सस्मितम्) वत्स अपि नाम अमिथ्यावचनोऽसि ।।१३।।

विदू-अधइं पेक्खध पेक्खध एदाइं पउमपत्ताइम् इति मर्मर-पत्राणि दर्शयति । ( संस्कृतमाश्रित्य ) ।।१४।।

दुःखिवराडीरागेण ।

नलिनवनं बनमालिकृते कृतमुज्झितकुसुमपलाशम् ।
पल्लवमपि वृन्दावनमनु कलयसि ललितविकाशम् ।।
सरले पश्यसि किमु नहि कृष्णम् ।
त्वयि निहिताशं गलितविलासं चातकमिव घनतृष्णम्।।ध्रु।।
विधुमिव वीक्ष्य विधुन्तुदमानय चपलमिति प्रतिवेलम् ।
वदति कथं वद यदि मदनो हृदि न वसति विरचितखेलम् ।।
गजपतिरुद्रमुदं तनुतामिति रामानन्दरायसुगीतम् ।
निभृतमनोभवविशिख-पराभवहरिविरहेण समेतम् ।।१५।।

---

एब गोपकुमारिका ।। १० ।।

बयं ब्राह्मणा ऋजबः स्फुटमेब भणामः ।।१२।।

अमिथ्याबचनः सत्यवचनः त्वम् ।।१३।।

अथ किं पश्यत पश्यत एतानि पद्मपत्राणि। अतिशुष्क-पत्राणि ।।१४।।

कृते निमित्तं । विधुमिब कश्चिद्वीक्ष्य किमुत बिधुं वीक्ष्य। राहुमानय इति प्रतिक्षणं बदति सति। निःशेषं यथा स्यात्तथा

मद–किमेतावता ॥१६॥

विदू–तुम्पि पिअवअस्सो जादो जाणिदम्पि ण जाणासि ता सअं जेव्व गदुअ मए आणिदव्वा । अहम्पि णिसिट्ठत्थो दूदो (इति गन्तुमिच्छति) ॥१७॥

कृष्णः–(उत्तरीये गृन्हाति) ॥१८॥

मद–वत्स कृष्ण ? किमिति मय्येव गोपयसि ॥१६॥

कृष्णः–देवि किंचित्प्रष्टव्यासि ॥२०॥

मद–विश्रब्धमभिधीयताम् ॥२१॥

कृष्णः–तवास्यादेतस्या बदनरुचमाकर्ण्य शशिनः
कृतावज्ञा यस्मादयमपि रुजं तद्वितनुताम् ।
तदङ्गे नासङ्गं भजत इति यो मे वहुमतः
कथं सोऽपि प्राणैर्मम मलयवातो विहरति ॥२२॥

मद–( स्वगतम् ) कृतार्थास्माकं मनोरथेन सार्द्धं राधिका, तदस्या अपि विरहावस्थां प्रकाशयामि । ( प्रकाशम् ) वत्स ? सापि लावण्यमात्रशेषा कल्याणी ॥२३॥ तथाहि -
शिलापट्टे हैमे तुहिनकिरणं चन्दनरसै
रियं तन्वी पिष्टा तनुमनु बिलेपं मृगयते ।

---

भूतो धृतो मनोभवस्य कन्दर्पस्य बिशिखस्य बाणस्य पराभवो येन तस्य हरेर्विरहेण समेतं संयुक्तम् ॥१५॥

त्वमपि प्रियबयस्यो जातः ज्ञापितमपि न जानासि तत्–स्वयमेब गत्वा मया आनेतव्या अहमपि निसृष्टार्थो दूतः ॥१७॥

क्षणं स्थित्वा हा हा सरसविसिनीपत्रशयने
समुत्तस्थौ यावज्ज्वलति न चिगन्मर्म्मरमिदम् ॥२४॥

( सामतोडोरागेण )

निरवधिनयनसलिलभवसादे ।
पतित कृशा परिचलति च पादे ॥
माधव गुरुतरमनजिसवाधा ।
हरिहरि कथमपि जीवति राधा ॥ध्रु॥
निवससि चेतसि कथमिव बामम् ।
शिव शिव शमयसि तदपि न कामम् ।
गजपतिरुद्रनृपतिमविगीतम् ।
सुखयतु रामानन्दसुगीतम् ॥२५॥

बिदू—भोदि साहसियाओ गोविआओ होन्ति त्ति तक्केमि, जं चन्दचन्दणेहिं अणुलेवणं मग्गेन्ति । अह्माणं पिअवयस्सो उण चन्दं पेक्खिअ दिणअर विअ उलूओ कहिं वि ओदारिदसरीरो णअणजुअलं मुद्दिअ चिट्ठदि । चन्द-

---

विसिनी पद्मिनी । इदं बिसिनीपत्रम ॥२४॥

सादे कर्दमे । निषद्वरस्तु जम्बालः पङ्कोऽस्त्री सादकर्दमाबित्यमरः । इवेति वाक्यालङ्कारे । बामं प्रतिकूलं । समयसि दबयसि । तदपि तथापि अविगीतं निर्दोषम् ॥२५॥

णाणं वाअं पि लम्भिअ सिद्धतन्तं विअ भुअङ्गो इदो तदो ओसरेदि ॥ २६ ॥

कृष्ण:- ( स्वगतम् ) साधु भणितम् ( प्रकाशम् ) धिङ् मूर्ख मातिबाचालो भव ॥२७॥

मद—एतस्या हृदयपरीक्षणाय कति कति प्रकाशिता न धर्मा: ॥२८॥

कृष्णः—( स्वागतं सातङ्कम् ) अपि नाम निवृत्तोयं मदभि- लाषतः ? ॥२९॥

मद–तदस्तु ।

यदा नासौ दोषं गणयति गुरूणां कुबचने
न वा तोषं धत्ते सरसबचने नर्म-सुहृदाम् ।
बिषाभं श्रीखण्डं कलयति बिधुं पाबकसमं
तदस्यास्तद्वृत्तं त्वयि गदितुमत्राहमगमम् ॥३०॥

---

भवति साहसिका गोपिका भवन्ति इति तर्कयामि यच्चन्द्र-चन्दनैरनुलेपनं मृगयन्ति अस्माकं प्रियबयस्य पुनः चन्द्रं प्रेक्ष्य दिनकरमिब उलूकः कुत्रापि अपवारितशरीरो नयनयुगलं मुद्र-यित्वा तिष्ठति । चन्दनानां बातमपि लब्ध्बा सिद्धतन्त्रमिब भुजङ्ग इतस्ततोऽपसरति ॥२६॥

असौ राधा । श्रीखण्डं चन्दनं । कलयति पश्यति । पाबकसमं अग्नितुल्यं । गदितुं वक्तुम ॥३०॥

कृष्णः-( सोच्छ्वासम् )

त्वञ्चेदवञ्चनपरे स्मरवारिराशे-
रुद्धर्तुमेषि तदकारणवत्सलासि ।
तत्केशरद्रुमनिकुञ्जगृहे प्रसाद्य
तामानयस्व नयकोविदतां तनुष्व ॥३१॥

मद-वत्स सत्यमेवेदम् ॥३२॥

बिदू-भोदि उज्जुए ! सच्चकं जेव्व एदं एत्थ अहं जेव्व पडिभू बह्मणो ॥३३॥

कृष्णः-अलमन्यथा सम्भावनया कुरु मत्प्रतिकारम् ॥३४॥

मद-इयं प्रस्थितास्मि स्वस्ति वत्साय (इति निष्क्रान्ता) ॥३५॥

( ततः प्रविशति संकेतोचितवेशा राधिका ।

राधा-सहि माहवि ! विप्पलम्भिदह्मि भवदीहिम् ॥३६॥

( कामकेलिरागेण )

तिमिरतिरोहितसरणी ।
गिरिषु दरीषु समेव हि धरणी ॥
चिरयति किं सखि देवी ।
विधिरपि मयि किमु नहि हितसेवी ॥ ध्रु ॥

भवति ऋजुके सत्यकमेवेदं तत्राहमेव प्रतिभूर्ब्राह्मणः ॥३३॥
सखि माधवि विप्रलम्भितास्मि भवतीभिः ॥३६॥

अतिवाहितमतिभीमम् ।
विफलमिदं किमु गहनमसीमम् ॥
सुखयतु रुद्रगजेशम् ।
रामानन्दरायकृतमनिशम् ॥३७॥

माधवी–सखि ! अलमन्यथा सम्भावनया, आगतामिव देवी-
मवधारय ॥३८॥

( ततः प्रविशति मदनिका )

मद—वत्से दिष्ट्या वर्द्धसे ॥३६॥

राधा–(सहर्षोच्छ्वासम् ) देवि अध को तत्थ वुत्तन्तो ? ॥४०॥

मद—वलवति मदनज्वरे यः स्यात् ॥४१॥

राधा–कधम्बिअ ? ॥४२॥

मद—इन्दुं निन्दति चन्दनं विकिरति प्रालम्वकं मुञ्चति
प्रालेयात्त्रसति प्रियं परिजनं नाभाषते संप्रति ।
गोविन्दस्तव विप्रयोगविधुरः किं किं न वा चेष्टते
त्वत्कुञ्जोदरतल्पकल्पनपरं राधे तमाराधय ॥४३॥

---

तिमिरेति अन्धकाराच्छन्नमार्गः । अतिबाहितमतिक्रान्तम् ।
गहनं वनम् ॥३७॥

अथ कस्तत्र वृत्तान्तः ॥४०॥

कथमिव ॥४२॥

प्रालम्वकं ऋजुलम्बिमालं । प्रालेयात् नीहारत् ॥४३॥

[ अथ निकुञ्जे कृष्णः ]

कृष्ण.—सखे कथं चिरयति मदनिका ( सातङ्कम् )

इयं तन्वी पीनस्तनजघनभारालसगति-
र्विदूरे कुञ्जोऽयं मम रचितसंकेतवसतिः ।
स्वतो भीरुर्बाला गहनमपि घोरान्धतमसं
कथंकारं सा मामभिसरतु को मेऽत्र शरणम् ॥४४॥

( क्षणं चिन्तां नाटयित्वा दीर्घमुष्णञ्च निःश्वस्य )

किमेषा मत्वा मामपरिचितभावं विमुखतां
प्रयाता विश्वासं किमु सहचरीवाचि न गता ।
अथ श्रान्ता वर्त्मन्यतितिमिरभाजीह विपिने
न शक्ता तन्वङ्गी स्मरशरहता वा ऽचलितुम् ॥४५॥

[ पुरतोऽवलोक्य ] अये कथमुदितप्रायोऽयं चन्द्रः ।

तथाहि –

यथेदं कोकानां प्रसरतितरां काकुविरुतं
यथा स्फीतं स्फीतं भवति परितः कैरवकुलम् ।
यथा मूर्च्छन्मूर्च्छत् प्रतिपतमिदं वारिजवनं
तथा शङ्के चन्द्रः प्रथमगिरिवीथ्यां विहरति ॥४६॥

---

चिरयति बिलम्बं करोति ॥४४॥ मत्वा बुद्ध्वा ॥४५॥
स्फीतं स्फीतं अतिफुल्लं । मूर्च्छन्मूर्च्छत् अभिम्लानं । प्रति-
पदं प्रतिस्थाने । वारिजवनं पद्मवनम् ॥४६॥

[ सखेदं ]

सख्या वाचि कथञ्चन प्रतियती बालान्धकारोचिते
नैषा वेशभरेण वा गतवती बर्त्मन्यथार्द्धे मम ।
अस्मिन् शक्रदिशं शशांकहतके स ंदूषयत्युन्मना
नागन्तु ं न च गन्तुमद्य चतुरा किम्बा करिष्यत्यसौ ॥४७

सबिनयाञ्जलिं बद्ध्वा ।

रे पूर्वपर्वत सखे कृपया मम त्वं
तुङ्गान्यमूनि तनु शृङ्गशतानि कामम् ।
याते बिलोचनपथं शशिनि प्रयाणो
बिघ्नो भवेन्मृगदृशो मम जीविते च ॥४८॥

विंदू— ( कर्णं दत्वा ) भो सुणीअदु किं रुणु रुणु सद्दं कुणई ॥४६॥

कृष्णः–( श्रु तिमभिनयति )

[नेपथ्ये]तन्मञ्जीररवः किमेष किमु वा भृङ्गावलीनिस्वन-
स्तत्काञ्चीरणितं नु मन्मथवतां किं सारसांनां रुतम् ।

अस्मिन्समये शक्रदिशं पूर्व्वदिशं । उन्मना उत्कण्ठित-मानसा ॥४७॥

भो श्र ूयतां किं रुणु रुणु शब्दं करोति ॥४६॥

मञ्जीरः नूपुरः । पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रिया-मित्यमरः । काञ्चीरणितं क्षुद्रघण्टिकाध्वनिः । स्त्रीकट्यां मेखला

एवं कल्पयतो विकल्पमचिरादालम्व्य सख्याः करं
गोविन्दस्य निकुञ्जकेलिसदने भूषाभवद्राधिका ॥५०॥

( मालवश्री रागेण )

चिकुरतरङ्गकफेनपटलमिव कुसुमं दधती कामम्
नटदपसव्यदृशा दिशतीव च नर्तितुमतनुमवामम् ।
राधा माधवविहारा ।
हरिमुपगच्छति मन्थरपदगतिलघुलघुतरलितहारा ॥ध्रु
शङ्कित-लज्जितरसभरचञ्चलमधुरदृगन्तलवेन ।
मधुमथनं प्रति समुपहरन्ती कुवलयदामरसेन ॥
गजपतिरुद्रनराधिपमधुनातनमदनं मधुरेण ।
रामानन्दरायकविभणितं सुखयतु रसविसरेण ॥५१॥

विदू— ( पुरतोऽवलोक्य ) भो वअस्स अम्हेहिं जिदं एसा तत्थभोदी आअच्छदि त्ति लक्खीअदि ॥५२॥

---

काञ्ची सप्तकी रसना तथा। क्लीवे सा रसनञ्चयाथ पुंस्कट्यां शृङ्खलं त्रिषु । कलायतः कुर्व्वतः ॥ ५० ॥

अपसव्यदृशा दक्षिणदृशा वामं शरीरं सव्यं स्यादपसव्यन्तु दक्षिणमित्यमरः । रसेन कौतुकेन । अधुनेति इदानीन्तनकन्दर्पम् ॥ ५१ ॥

भो वयस्य जितमस्माभिः एषा तत्र भगवती आगच्छतीति लक्ष्यते ॥ ५२ ॥

( ततः प्रविशति मदनिका )

मद-वत्सौ सम्पन्नश्चिरेण सुहृदां मनोरथः तन्मामनुमन्यस्व स्थानान्तरवासगमनाय ॥५३॥

विदू—मम्पि निउञ्जान्तरवासगमणस्स । ( इति निष्क्रान्ताः सर्वे ) ॥५४॥

इति राधाभिसारश्चतुर्थोऽङ्कः ॥ ४ ॥

---

वत्सौ राधाकृष्णौ । ममापि निकुञ्जान्तरगमनाय ॥५३॥



## पञ्चमोऽङ्कः

( ततः प्रविशति शशिमुखी )

शशि-अए ! अज्ज निउञ्जे कल्लाणाहिनिवेसाणं को वुत्तन्तो त्ति ण जाणीअदि । ता देईं अणु सरिअ जाणिस्सं (पुरतोऽवलोक्य) अए कधं एसा णिद्दा-मुउलिद - लोअणा लहु लहु इध जेव्व आअच्छदि ॥ १ ॥

---

अयेऽद्य निकुञ्जे कल्याणाभिनिवेशयोः कोवृत्तान्त इति न ज्ञायते तत् देवीमनुसृत्य ज्ञास्यामि अये कथमेषा निद्रा मुकलित लोचना लघु लघु इहैवागच्छात् ॥ १ ॥

( संस्कृतमाश्रित्य )

स्वैरं स्वैरं कथमपि दृशौ मन्दनिष्पन्दतारे
विन्यस्यन्ती शिथिलितभुजद्वन्द्वसन्नामितांसा ।
मन्दन्यासस्खलितचरणा व्यस्तमञ्जीरघोषा
देवी निद्राकुलतरतनुर्मोदमाविष्करोति ॥ २ ॥

( सुखसिन्धुडारागेण )

दरमुकुलारुणलोचनमानन इह गतकान्तिविकाशे ।
कमलमिवारुणमुषसि विधावनुविम्बितमम्बुसकाशे ॥
किमिदमियं प्रविशन्ती ।
भजति मनो मम रतिविरताविव बनिता कपि चलन्ती
॥ध्रु०॥

शिथिलभुजा-मृदु-रणित-कनकमणि-कङ्कणमिदमनुवारम् ।
विसकलपादनिबेश-निवारित-नूपुर-ललित-विहारम् ।
गजपतिरुद्रनराधिपहृदये मुदमिदमातनुतेति ।
रामानन्दरायकविभणितं विलसति रसिकजनेऽति ॥ ३ ॥

( ततः प्रविशति यथोक्तवेशा मदनिका )

---

स्वैरं स्वैरं मन्दं मन्दं यथा स्यात्तथा । मन्दं अल्पं शिथिलितेन शिथिलीभूतेन भुजद्वन्द्वेन सन्नामितोऽसौ यस्याः सा ॥२

दरं ईषन्मुद्रितं । उषसि प्रातःकाले जलनिकटस्थचन्द्रे प्रतिबिम्बितपद्मामिव । इदं किमाश्चर्य्यं भजति आनन्दयति ॥३

( चक्षुषी विमृज्य पुरतोऽवलोक्य )

मद—अहो रमणीयता वसन्तयामिनीपरिणामस्य तथाहि ॥४॥

इतो मन्दं मन्दं सरसिजवनी–वातलहरी
ततश्चूतास्वादप्रमुदितपिकानां कलकलः ।
क्वचित्फुल्लां वल्लीमनु मधुकराणां स्वरकथा
कुतश्चित् कोकानां मृदुमधुरमानन्दलपितम् ॥ ५ ॥

( द्वित्राणि पदानि परिक्रम्य आनन्दमभिनीय )

उद्दाम-स्मर-चातुरी-परिचयादन्योऽन्य रागादिमां
रात्रिं जागरितानि सद्मनि युवद्वन्द्वानि यच्चेरते ।
तत्तेषां श्वसितानिलेन तुलनामासादयिष्यन्निव
प्रोन्मीलत्कमलावलीषु वलते श्रीखण्डवीथीमरुत् ॥६॥

( पुरतोऽवलोक्य सविस्मयम् )

चकितचकितं क्वापि क्वापि प्रमोदनिरन्तरं
क्वचन वनिताकुण्ठोत्कण्ठं निधाय विलोचने ।
कलयति तथावस्थामेषा रथाङ्ग-कुटुम्बिनी
भवति न यया चान्तेवासी विदग्धवधूजनः ॥ ७ ॥

---

रात्रिमिति अविच्छेदे द्वितीया ॥ ६ ॥

रथाङ्गकुटुम्बिनी चक्रवाकी । ययावस्थाया विदग्धवधूजनः अन्तेवासी शिष्यो न भवतीति न अपि तु भवत्येवेत्यर्थः । छात्रान्तेवासिनौ शिष्यो इत्यमरः ॥ ७ ॥

( क्षणमन्यतो गत्वा साश्चर्यम् )

अये ! अतिरमणीयमिदं वर्त्तते ।

तथाहि उन्मीलत्-कमलोदरे मधुभरे दृष्ट्वानुविम्बं निजं
मन्वाना दयितं कथञ्चिदधुना नोत्कण्ठया धावति ।
उत्कण्ठोपनतं पुनः सहचरं दृष्ट्वा विलज्जा मुहु-
र्न स्थातुं न च गन्तुमत्र चतुरा भृङ्गी चिरं भ्राम्यति॥८

शशि—इयमतिप्राभातिक-रामणीयकाहृतचित्ततया न माम-लोकयति । तदुपसृत्य वन्दे [ इत्युपसृत्य ] देवि वन्द्यसे ॥ ९ ॥

मद—कथं शशिमुखि वत्से मे चिरमन्यचित्ततया नाव-धारितासि ॥ १० ॥

शशि—देवि ? किथं निद्राकुलामिव भगवतीं तर्कयामि ॥११

मद—वत्से ? इवेति कथं तथैव ॥१२॥

शशि—अथ कथमिव ॥

मद—राधामाधवयोरद्य निकुञ्जमधितिष्ठितोः ।
तत्तत् कुतुकितालोकान्निशेयमतिवाहिता ॥१३॥

शशि—अथ कीदृशस्तत्रत्यो वृत्तान्तः ? ॥१४॥



इयं देवी । उपसृत्य निकटं गत्वा ॥ ९ ॥
अतिवाहिता लङ्घिता ॥ १३ ॥

मद—शृणु ( नयने प्रमृज्य ) वत्से ? जानासि निकुञ्जप्रवेशावधि ॥ १५ ॥

शशि—अथ किं ॥१६॥

मद—तदनन्तरं,

यस्तम्भो मुरविद्विषः समभवत्तेनापि तस्या मनो–
माध्यस्थ्यं परिशंकते भयमनोजन्मत्रपानिर्भरम् ।
कामेषुव्रजपक्ष्मवातविसरप्राप्तोदयो न क्षणा-
दश्वासं हरिणीदृशो वितनुते तस्य प्रकम्पो यदि ॥१७

शशि—प्रियं मे प्रियं कृतार्थाऽस्मि ॥१८॥

मद—इतः परमपि सुहृदां कृतार्थता ॥२६॥

शशि—अपि नाम दृष्टं देव्या अन्यदपि ॥२०॥

मद—समस्तमेव ॥२१॥

शशि—ततस्ततः ॥२२॥

मद—वत्से ?

साशङ्कं समनो-भव-प्रहसितं सापत्रपं सस्मयं
सासूयं समनोहरात्मकपदं सप्रेम सोत्कण्ठितम् ।

---

अथ किम् ॥ १६ ॥

मध्यस्थं स्तम्भेन राधायाः ताटस्थ्यं । शङ्कते तदा इत्युह्यम् । मनोजन्मः कन्दर्पः । विसरः समूहः, तस्य श्रीकृष्णस्य ॥१७

देव्या त्वया । सस्मयं सगर्व्वं । तत् बिहरणं । येन रतेन ॥ २३ .

राधाया मधुसूदनस्य च तदा कुञ्जे तदासीद्रतं
येनासीन्मदनोपि विस्मयरसस्निग्धान्तरो निर्भरम् ॥२३

[ आहिररागेण ]

मृदुमञ्जीररवानुगतं गतमनया शयनसमीपम् ।
मधुरिपुणापि पदानि कियन्त्यपि चलितं कियदनुरूपम् ॥
शशिमुखि किं तव वत कथयामि ।
राधामाधवकेलिभरादहमद्भुतमाकलयामि ॥ ध्रु० ॥
मिलितमिदं किल तनुयुगलं पुनरपि न कश्चन भेदम् ।
विषमशराशुग-कीलितमिव सखि गलितचिरन्तनखेदम् ॥
नखररदावलि-खण्डितमपि गुरुनिःश्वसितायतभीतम् ।
रुद्रगजाधिपमुदमातनुतां रामानन्दरायसुगीतम् ॥२४

शशि—देवि ! असम्बद्धमिवेदं प्रतिभाति माम् ॥२५॥
मद—कथमिव ! ॥ २६ ॥
शशि—तयोः कथमीदृशं सौरतकौशलं जातम् ॥२७॥
मद–अयि सरले !

उपदिशति गुरुर्गुरुप्रयत्ना-
दपि च कालवशात् प्रयाति पाकम् ।

---

कियन्ति पदानि वाप्य । विषमशराशुगः कन्दर्पबाणः, कीलितं बद्धं बद्धे कीलितसंयतावित्यमरः । गलितो दूरीभूत-श्चिरन्तनः खेदो यत्र तत् तनुयुगलं क्रियाविशेषणं वा ॥२४॥

इति किल नियताः समस्तविद्याः
सुरतकलाः स्वत एव सम्भवन्ति ॥२८॥
अत्रान्तरे सुरतकेलिकलासु तासु
प्रायेण शिक्षित इवैष शशी चिरेण ।
योग्यां ततः किमपि कर्त्तुमिव प्रकामं
संसेवते स्म चरमां दिशमादरेण ॥२९॥

शशि—सम्प्रति च कल्याणिनोः,
अभिमत-सुरत-प्रमोद-लक्ष्मी-
परिचय-निर्वृतिमायतोऽचिरेण ।
नखपददशनाङ्कचारुभूषा-
ललिततमं वपुरीक्षितुं मनो ने ॥३०॥

(ततः प्रविशति सत्वरा राधिका कतिचिद्दूरे कृष्णश्च)

राधा—(पुरतोऽवलोक्य) आपसन्नाइं दिशां मुहाइं, ता कधं ओवारिदसरीरा गमिस्सम् (सत्वरं द्वित्राणि पदानि परिक्रम्य वलितग्रीवमवलोकते) ॥३१॥

कृष्णः—(क्षणं निर्व्वर्ण्य) अहो भयमन्मथसम्वलना मृगाक्षी ।
द्वित्राण्येव पदानि गच्छति जवाद्द्वित्राणि मन्दं पुन-
स्त्रासोत्कम्पमथापि पश्यति दिशः साकूतमेताः पुनः ।

---

असम्बन्धं असङ्गतम् ॥२५॥ अन्तरे अवसरे ॥२६॥
आ ईषत् प्रसन्नानि दिशां मुखानि तत्कथमपवारितशरीरा गमिष्यामि ॥३१॥

योन स्यादपि गोचरे नयनयोर्नेदिष्टमेतं जनं
सम्प्रत्येति पदे पदे व्यवहितं मामन्तिकेऽपि प्रिया ॥३२

राधा—(पुनः सत्वरं परिक्रामति) ॥३३॥

मद—वत्से पश्य पश्य पुरतो राधिकां कतिचिद्दूरे माधवञ्च।
इयं हि--
न व्यालादपि सम्बिभेति पुरतः स्थाणोर्यथा दूरतो
नोद्विग्ना करिगर्जितादपि यथा काकावलीनिस्वनात्।
नैवेयं तिमिरेऽपि मुह्यतितरां कामं प्रकाशे यथा
तन्मन्ये विरहेऽपि नैव विधुरा कान्तस्य योगे यथा ॥३४

ललितरागेण—

अभिमतगाढ़मनोरथ–समुचितरतिपति–समरविशेषे।
विजयपराजय–परिचयविमुषित–चेतसि वलदभिलाषे॥
लुलितमनोहरदेहा।
कथयति परिचयमियमतिनिपुणं मृदुपदकमल–
लवेहा ॥ध्रु॥
कुसुमशरासनशरनिकरध्वनि–मणितमनोहरघोषे।
गुणपरिपाटितया परिकल्पित–नखदशनक्षतदोषे॥

---

एतामदधिकरणीभूता दिशः। अन्तिके निकटे स्थितमपि मां व्यवहितं जानाति। प्रिया राधा ॥३२॥

गजपतिरुद्रनराधिपविदिते रसिकजनाहिततोषे
रामानन्दरायकविभणिते हृदयं कुरुत विदोषे ॥३५॥
तदतिभयकातरेयं वत्सा । तत् उपसृत्य सम्भाव-
थामस्तावदेनाम् (इति उपसृत्य) वत्से स्वागतं ते ॥३६

राधा—(ससम्भ्रममवलोक्य) अत्र कधं एषा देई (सलज्जं
वन्दते) ॥३७॥

(नेपथ्ये कलकलः) अब्रह्मण्यमब्रह्मण्यम् ।
(सर्व्वाः श्रुतिमभिनयन्ति ॥३८॥ पुनर्नेपथ्ये)
शृङ्गाभ्याञ्च खुराञ्चलेन च वलादेष क्षमामुल्लिखन्
कल्पान्तस्तनयित्नु-गर्जितघनध्वानैर्दिशो दारयन् ।
उल्कार्च्चिः प्रतिमल्लमक्षियुगलं क्रोधादिवान्दोलय-
न्नेष व्यापदि मज्जयन् व्रजमभूद्दैवादरिष्टोऽग्रतः ॥
(सर्व्वे निकुञ्जोदरे आत्मानमपवार्य्य पश्यन्ति) ॥३९॥

---

भणितं रतिकूजितम् । विदोषे निर्दोषे ॥३५॥
अये कथमेषा देवीति ॥३७॥
अब्रह्मण्यमवध्योक्तौ ॥३८॥
क्षमां भूमिम् ।
अर्च्चिः शिखा । प्रतिमल्लं सदृशम् । व्यापदि बिशिष्टविपत्तौ ॥३९॥

कृष्णः—(साटोपमुपसर्पन् ) अभयं घोषनिवासिनाम् ।

(सगर्व्वं वाहुमुद्यम्य) ॥४०॥

दृप्यद्दानवशीर्णशैलवलयक्षौणीमहालम्बने
वैरिव्याकुलशक्रशान्तिकमखप्रोद्दामयूपेऽपि च ।
अस्मिन् कृष्णभुजेऽपि जाग्रति भयं नित्यं तदेकश्रयान्
घोषस्थानपि संस्पृशेदहह किं प्राणैर्मम क्रीड़ति ॥

(इति साटोपं परिक्रामति) ॥४१॥

(नेपथ्ये) भोः कष्टं कष्टम् ।

याभ्यां गिरिणामपि शृङ्गवत्त्वं
सोढुं न शक्तेन विदारितास्ते ।
तयोरनेनोत्पलकोमलाङ्गो
लक्ष्यीकृतो वालतनुर्मुकुन्दः ॥४२॥

(मदनिका विलोक्य सास्रम्)

अद्य क्षौणि सहस्व भारमतुलं देवा जयाशा कुतः
श्रीदेवि व्रतमाचर व्रजजनाः क्वानन्दवार्त्तापि वः ।

---

गिरीणां शृङ्गवत्वम् ।

नु वितर्के । सोढूं अशक्तेन अनेन याभ्यां ते गिरयो विदारताः । नयोः शृङ्गयोः । अनेन अरिष्टेन ॥४२॥

मातर्देवकि किं भविष्यसि गता नन्दादयो राधिके
शून्यं ते जगदद्य जातमधुना हा हा हताः स्मो वयम् ॥४३

राधा—(श्रुतिमभिनीय मातङ्क) हद्धि हद्धि मह मन्द-भाइणीए एआरिसं दुद्दे्व्व विलसिदं जादम् ॥४४॥

शशि—सखि! समाश्वसिहि समाश्वसिहि एष खलु मुकुन्दः ॥४५

(नेपथ्ये)

यत्रोन्मीलति मीलितं त्रिभुवनं यत्रोन्नमत्यानतं
यस्मिन् भ्राम्यति न भ्रमन्ति वियति प्रायेण वाता अपि।
क्षिप्त्वा कन्दुकलीलया तमधुना वृन्दावनाद् दूरतो
हत्वारिष्टमरिष्टमेतदकरोत् श्रीमान् मुकुन्दो जगत् ॥४६॥

(ततः प्रविशति कृष्णः सर्व्वाः सस्पृहमालोकयन्ति) ॥४७

मद—अहो रामणीयकं जयश्रीभूषणस्य वत्सस्य तथा हि—

विस्रस्तालकवल्लरीपरिमिलत्स्वेदोदविन्दूत्कर—
व्यालिप्तालिकचन्दनः क्रमगलत्केकिच्छदोत्तंसकः।

---

देवकि यशोदे। द्वे नाम्नी नन्दभार्य्यायाः यशोदा देवकीतिचेति वचनात् ॥४३॥

हा धिक् मम मन्दभागिन्या एतादृशं दुर्दैवविलसितं जातम् ।४४॥

यत्र यस्मिन् अरिष्टे प्रकाशमाने सति त्रिभुवनं प्रकाशरहितम्। रिष्टं क्षेमशुभाभावेष्वरिष्टे तु शुभाशुभे इत्यमरः ॥४६॥

पादक्षेपसमुच्छलत्क्षितिरजो रम्याङ्गरागश्चिरा-
दानन्दं वितनोत्ययं नयनयोराविर्भवन्माधवः ॥४८॥

(उपसृत्य) दिष्ट्या दृष्टोऽसि वत्स ! जयश्रीस्वयम्बरा-
लिङ्गितः ॥४९॥

कृष्णः—(दृष्ट्वा सहर्षं) देवि स्वागतं ते ॥५०॥

मद—स्वागतमधुना वत्सेन जयश्रीभूषणेन दृष्टेन तद्वत्स !
क्षणमिह वकुलपादपोपवीथ्यां विश्राम्यताम् ॥५१

कृष्णः—यदभिरुचितं देव्यै (इत्युपविशति) ॥५२॥

मद—(सस्नेहमङ्गं स्पृशति) वत्स ! कृतदुष्करकर्म्मणः कि-
मपि पारितोषिकं दित्सामि ॥५३॥

कृष्णः—यदभिरुचितं देव्यै ॥५४॥

मद—(निष्क्रम्य राधामादाय प्रविश्य) वत्स !
नवाभिसङ्गविधुरां त्रासोन्मीलितलोचनाम् ।
मधुरालोकनेनैनां सम्भावय चिरादिव ॥५५॥

कृष्णः—(सस्पृहमालोकयति) ॥५६॥

मद—वत्से !
क्रूरसङ्गरपरिश्रमोल्लसत्स्वेदविन्दुनिकरैः करम्बितम् ।
अञ्चलेन निजवाससः प्रियं बीजय प्रियगिराभिनन्द्य च ॥५७

---

अलिकं ललाटम् ॥४८॥
दित्सामि दातुमिच्छामि ॥५३॥

(राधा सस्पृहं बीजयति)

मद—इतःपरं किन्ते प्रियं सम्पादयामि ? ॥५६॥

कृष्णः—देवि ! इतःपरं किमपि प्रियमस्ति ?

पञ्चेषोर्विशिखावलीभिरभितो निस्तद्यमाणेन चे-
दानन्दैकनिदानमेणनयना प्राप्ता प्रसादात्तव ।
भूयः सेयमलम्भि काचन दृशोः पीयूषधारा मया
किं वात: परमस्ति देवि भुवने किञ्चित् प्रियं मादृशाम्
॥६०॥

मङ्गलगुञ्जरीरागेण–
परिणत–शारदशशधरवदना ।
मिलिता पाणितले गुरुमदना ॥
देवि किमिह परमस्ति मदिष्टम् ।
बहुतरसुकृतफलितमनुदिष्टम् ॥ध्रु॥
पिकविधुमधु–मधुपावलि चरितम् ।
रचयति मामधुना सुखभरितम् ॥
प्रणयतु रुद्रनृपे सुखममृतम् ।
रामानन्दभणित हरिरमितम् ॥६१॥
तथापीदमस्तु—

---

अनु लक्षीकृत्य ॥६१॥

श्रद्धाबद्धमतिर्मम प्रतिदिनं गोपाललीलस्य यः
संसेवेत रहस्यमेतदतुलं लीलामृतं लोलधीः ।
तस्मिन् मद्‌गतमानसे किल कृपादृष्ट्या भवत्या सदा
भाव्यं येन निजेप्सितां ब्रजबने सिद्धिं समाप्नोति सः ॥६२

मद—तथास्तु ॥६३॥

(इति निष्क्रान्ताः सर्व्वे) ॥६४॥

इति श्रीजगन्नाथवल्लभनाटके श्रीराधासङ्गमो नाम पञ्चमोऽङ्कः॥५॥

इति श्रीरामानन्दरायकबिसार्व्वभौमबिरचितं
श्रीजगन्नाथवल्लभनाटकं समाप्तम्

—※-:०※०:-※—

लोलधीः सतृष्णबुद्धिः । लोलश्चलसतृष्णयोरित्यमरः । येन कृपादृष्टेन ॥६२॥

—०※०—:※:—०※०—



❀ श्रीगौरहरिर्जयति ❀

# ❀ श्रीजगन्नाथवल्लभ नाटक का अनुवाद ❀

❀ —— ❀ —— ❀

जिस में निषाद आदि सातों स्वरों से युक्त बीणा, बेणु तथा मृदङ्गादि बाद्यों के सहयोग से उत्कृष्ट सङ्गीत होरहा है, जो त्रिभङ्ग तनुलता में आलम्बित मनोहर हास्य से परिबर्द्धित है एवं जो सखिओं की करताल-ध्वनि तथा नूपुरों की झनकार से उज्वल हो रहा है एसा मुरदमन श्रीकृष्ण का नृत्य त्रिभुवन के आनन्द बर्द्धन करें ॥ १ ॥

और भी-क्या यह मन्दहास्य है ? नहीं नहीं यह शीतल-किरण वाला चन्द्रमा है, यह चञ्चल-नेत्र नहीं है यह तो भ्रमरों से युक्त कमल है, यह कर्ण नहीं है जगज्जय के लिये कामदेब के धनुष के प्रत्यंचा ( गुण ) है, इस प्रकार आनन्द-वेग से मुग्ध-गोपाङ्गनाओं का श्रीकृष्ण-दर्शन जनित दृगञ्चल उत्पन्न भ्रम आप लोगों के शत शत शुभ विधान करें ।।२।।

और भी-कुरङ्गनयना गोपाङ्गनाओं के अनङ्गसागर को उमगाता हुआ, योगियों के चित्त-रूपी कुमुदबन को खिलाता हुआ राक्षस-रूप कोककुल ( चक्रबाल समूह ) को एकान्तभाब से शोकाकुल करता हुआ मधुनाशन श्रीकृष्ण का मुख-शशी तुम सब का आनन्द बिस्तार करें ॥ ३॥

जिन के मस्तक पर निबद्ध मयूरपुच्छ समूह सुन्दर मलयानिल के मन्द मन्द संचारण से सञ्चलित हो रहा है, कन्दर्प-बाण से बिन्धि हुई क्षुब्धचित्त ब्रजसुन्दरी गण अपने कुटिल चञ्चल नयनाञ्चल के द्वारा जिन को कौतुकान्वित कर रही

हैं, जो चन्द्रमुखी गोपरमणियों के बदन-दर्शन में लोलुप हैं, जिनका चित्त कन्दर्पकेलि रस में अत्यन्त आसक्त है, जिन की ग्रीबा रस वश ईशत् कम्पित है एवं जो गजपति प्रतापरुद्र महाराज के हृदय में बिराजमान हैं उन मधुसूदन श्रीहरि का भजन करो। श्रीरामानन्दराय इस सुचारु सरस सङ्गीत पूर्ण नाटक की रचना करते हैं ।।४।।

अपने इष्टदेब श्रीकृष्णचन्द्र की मङ्गलस्तुति पाठ के ऊपरान्त सूत्रधार बोलता है-बस यहाँ तक सुन्दर है अधिक बिस्तार का प्रयोजन नहीं है। प्रिये! आओ आओ ।। ५ ।।

[ नटी का प्रवेश ]

नटी—आर्य ! मैं उपस्थित हूँ, प्रणाम करती हूँ। चरण पतित अपनी किङ्करी को अवलोकन प्रसादों से प्रसन्न हृदय कराना पति ही परम प्रमाण रूप है ।।६।।

सूत्रधार-( सहर्ष ) प्रिये ! तुम चिरकाल पर्य्यन्त बिदग्धोचित वेश के द्वारा यौवनबिलास अनुभब करो ।

नटी—प्रभो ! आपने किस प्रयोजन से दासी को आह्वान किया है ।।७।।

सूत्र—प्रिये ! बड़े आनन्द की बात है क्या तुम नहीं जानती हो?

नटी—नहीं, आप बिस्तार पूर्वक कहिये, उसको सुनने के लिये मेरा चित्त बड़ा उत्सुक हो रहा है ।।८।।

सूत्र—प्रिये सुनो, आज बसन्त दिबस का अबसर प्राप्त है, जिस में तरुण सूर्य से बिरहित दक्षिण-दिशा रूपी रमणि के स्तन-कलस सदृश मलयाचल के उपरिभा‑ में अबलम्बित बेणी की भाँति सर्प समूह के संसग प्राप्त समीरण के भंस्पर्श से जो समस्त बिरहिणिजन मू-

र्च्छित होकर पड़ी हुई हैं उन के जीवनोपाय स्वरूप सखियों का आश्वासमय बचन चारों ओर विस्तार होरहा है, निर्मल गगन रूप कानन में दीप्तिशील, नव प्रकाशित, तुलनारहित मुक्ताफल की भाँति प्रकाशित ताराकलिकाओं के मध्यवर्त्ती परिपूर्ण चन्द्रमा रूप बिकसित श्वेतपुष्प मानो क्रोध से देखने बाली बिरहिणीजन के चञ्चल लोचनाञ्चल रूपिणी लता के अग्रभाग में शोभित होरहा है।

इस प्रकार बसन्तबासर की सन्ध्या में महाराज प्रतापरुद्र, जिनकी निरुपम कान्ति दर्शन से लक्ष्मीपति लुब्ध-हृदय हो कर उन के चित्तरूप क्षीरसागर में निवास कर रहे हैं, जो विभाबादिबर्ग से परिणत रसरूप रसाल ( आम्र ) मुकुल आस्वादन में बिदग्ध ( रसिक ) भ्रमर हैं, जिनका हृदय श्रीराधा के कंठहार-सहचर श्रीकृष्ण के गुण रूप मुक्ताफल से भूषित है, अधिकं तु जिन के नाम का श्रवण कर सिकन्दर नामक यबनराज ने भयचित्त से पर्व्वत गव्हर में प्रवेश किया है, करेल देशिय नरपाल अपने परिबारवर्ग को साश्रु नेत्र से देखने लगा है, जिनके नाम श्रवण मात्र से ही गुज्जरदेश के राजा अपनी नगरी को जीर्ण अरण्य की भाँति मानने लगता है तथा गौड़देशीय क्षितिपाल गण अपने को प्रबल वायु ( आंधी ) वेग से समुद्र स्थित घूर्णायमान नोकारूढ़ की भाँति बोध करने लगते हैं, जिन की कीर्तिराशि कैलाश पर्वत के कायव्यूह के समान, हिमालय के निर्य्यासतथ्य के समान, क्षीरसागर के फेण के समान, शरद्कालीन मेघमाला के समान तथा गंगाजल के समान प्रभावशाली होकर जगत् को निर्मल

बनाती है, जिन के दानोत्सर्ग जल से निर्म्मित नदियों का सङ्ग लाभ कर हर्षयुक्त सागर तरलित हो कर उच्चध्वनि छल से स्तव करता रहता है, जिन के नित्य अनुष्ठित यज्ञों के द्वारा देवता सकल बद्ध चित्त हो कर प्रतिमा छल से क्षण काल के लिये भी प्राङ्गन त्याग नहीं करते हैं, जो विपक्ष-राजाओं के कालाग्नि रुद्र (प्रलयकालीन रुद्र) स्वरूप हैं उन प्रताप-रुद्र महाराज ने हम को हरिचरणाश्रित किसी एक अभिनव प्रबन्ध का अभिनय करने का आदेश दिया है ॥६-१३॥

हे प्रिये ! उन्होंने ऐसा कहा है कि -हे नट श्रेष्ठ ! मधुनाशन श्रीकृष्ण के चरण-संसर्गि लीला-विलासों से युक्त, उन उन नाना सद्गुणों से शोभित, सामाजिक गण के चित्त आमोद कारी ऐसा एक अभिनय प्रवन्ध का अभिनय करो जो कि किसी पुरातन प्रबन्ध का आदर्श लेकर प्रतिच्छाया के समान न हों ॥ १४॥

नटी—कहने को आज्ञा दीजिये।

नट—प्रिये ! मैं किस प्रकार सम्पूर्ण विद्याओं के निधि रूप उन का आराधन करूँ क्यों कि इस प्रकार कार्य्य सम्पादन वासना में वाक्पति वृहस्पति भी कर्त्तव्य बिमूढ़ हो जाता है (क्षणमात्र विचार कर के) आहा प्रिये ! स्मरण हुआ ॥१५॥

नटी—अच्छा कहो तो वह किस प्रकार है? ॥१६॥

सूत्र—प्रिये ! धैर्य-गाम्भीर्य्य-मर्य्यादा-तथा प्रसादादि गुणों के रत्नाकर (समुद्र) समान, वृहस्पति प्रणीत नीति समूह से युक्त मन्त्रणा प्रभाव से सरल-गुणवान क्षितीश्वर प्रताप-रुद्र जिनके वशीभूत हुए हैं, भवानन्द राय के पुत्र हरिचरण-परायण कबि श्रेष्ठ उन रामानन्द राय ने भगवद्गुणों से

अलङ्कृत जगन्नाथ बल्लभ नामक नाटक जो महाराज प्रतापरुद्र के प्रिय एवं रामानन्द सङ्गीत नाटक करके प्रसिद्ध है उसका निर्म्माण कर हम को प्रदान किया है। अतः उस का ही अभिनय करूँगा ॥१७॥

और भी कबिवर रामानन्द राय ने बिनय पूर्वक ऐसा कहा है कि-यद्यपि मुझ से निर्म्मित इस प्रवन्ध में गुण का लेश मात्र नहीं है तो भी मधुनाशन श्रीकृष्ण चरण-कमल संसर्गि गुण-कीर्त्तन के मौजूद रहने के कारण सहृदय (सामाजिक) वर्ग के हृदय में प्रचुर आनन्द-हेतु होगा, इसलिये मेरा यह प्रयास बिफल नहीं होगा ॥ १८॥

अतः नट समूह को उपयुक्त वेश धारण के लिये आदेश करो।

नटी—(संस्कृत में) स्वामि! जो आज्ञा (सम्मुख में देखकर) देखो देखो ॥ १९॥

प्रदोषकाल में पुष्पों की धूलि से धूसरित अंग बाला भ्रमर प्रति कमल के मधुपान से अत्यन्त मत्त होकर मन्द मलयानिल के सञ्चरण से मृदु मृदु तरङ्गायित सरोवर मध्यवर्ति कमल कोष के अभ्यन्तर में अंग समूह का संयत करके शयन किया हुआ है।

सूत्र— (सहर्ष) प्रिये! अच्छा अच्छा, तुम ने हमारे चित्त को कौतूहल सागर के बिवर्त्त (घूर्णा) में निक्षेप किया है। क्यों कि शत शत गोपाङ्गनाओं के अधर मधु-पान पूर्वक अत्यन्त क्रीडा-श्रम से अलसाङ्ग, किसी प्रौढ़-गोप वधू के स्तन रूप उपधान (तकीया) से युक्त हृदय-पलंग में शयन

कारी पीताम्वर नारायण हमारे स्मृति पथ में आरूढ़ हुए हैं। ॥ २० ॥

[ नेपथ्य में ]

वत्तीस महालक्षण से युक्त देव देवेश्वर श्रीहरि गोप-बालकों को साथ में लेकर यमुनातीर-वर्त्ति कानन में गमन कर रहे हैं ॥ २१ ॥

[ केदारराग ] इन युवतियों के मनोहर बेश धारी मुर-रिपु का अवलोकन करो। मानो शरत्कालीन चन्द्रमा अनु-पम रूप धारण कर भूतल में अवतीर्ण हुआ है। आहा! इन के मस्तक स्थित चूड़ा का पल्लवगुच्छ के साथ मयूरपुच्छ समूह सुमन्द पवन के मन्द मन्द सञ्चालन से ईषत् कम्पाय-मान हो रहे हैं, इन के ललाट में तिलक इस प्रकार उज्वल प्राप्त हो रहा है मानो उस से मरकतमणि निर्म्मित दर्पण में प्रतिबिम्वित पूर्णचन्द्रमा विडम्वित हो रहा है, और इन की लीलावश आन्दोलित मणिकुण्डल की छटा मुखमण्डल की शोभा बिस्तार कर रही है, एवं वे हेला पूर्वक मधुर-भाव से इस प्रकार लोचन चञ्चल कर रहे हैं कि जिस से गोपवधूओं का लोभोत्पन्न हो रहा है। रानानन्दराय कवि के द्वारा बर्णित श्रीमधुरिपु का यह मधुररूप, गजपति प्रतापरुद्र महाराज के चित्त में निरन्तर आनन्द बिस्तार करें ॥ २२ ॥

सूत्र— [ सचकित ] प्रिये ! हमारे कनिष्ठ भ्राता श्रीकृष्ण के वृन्दावन गमन का आवेदन कर रहा है। अतः हम सब नेप-थ्य समृद्धि के लिये गमन करें। ( एसा कथोपकथन के बाद दोनों का प्रस्थान ) ॥२३॥

प्रस्तावना:— अर्थात् वक्तव्य प्रस्ताव का आरम्भ—

[ अनन्तर निर्दिष्ट स्थान में श्रीकृष्ण का प्रवेश ]

कृष्ण--सखे रतिकन्दल ! ( मधुमङ्गल ) देखो देखो बृन्दाबन की कैसी आश्चर्य रमणीयता ? चार-ओर वृक्ष-लता समूह बसन्त ऋतु के समागम से प्रमुदित हो कर अपने अभिनव पल्लव युक्त चञ्चल शाखा रूप स्पर्श के द्वारा भ्रमर आलिङ्गित विकसित कुसुम रूप अञ्जन युक्त लोचनों से परस्पर मानो अबलोकन एवं वायुबेग से चञ्चल होकर मदमत्त कोकिल के निनद छल से परस्पर रसालाप तथा कलिका उद्गम छल से रोमाञ्चित हो कर अत्यन्त शोभा बिस्तार कर रहे हैं ॥२४-२५॥

बिदू—भो बयस्य ! तुम्हारे लिये यह बृन्दाबन रमणीय हो रहा है, परन्तु हमारे लिये जहाँ कहीं शिखरिणी, कहीं रसाला, कहीं सुगन्धीघृत कहीं बा शाल्यन्न मौजूद हैं इस प्रकार भोजनालय प्रियकर है ॥२७॥

कृष्ण—सखे ! अवलोकन करो, हमारा यह बृन्दावन पृथिवी का सार रूप है। जो कि तुम्हारे खेला-युक्त अदृष्टचर रूप को देख कर मानो विकशित कुसुम समूह की सुषमा छल से बहु क्षण पर्य्यन्त उच्चहास कर रहा है एवं तुन्हारे समागम से सकौतुक हो कर मृदु मारुतकम्पित पल्लव रूप कर द्वारा सर्वदा मानो नृत्य करने का आदेश कर रहा है। रामानन्दराय के द्वारा बिरचित यह सङ्गीत जो कि गजपति प्रतापरुद्र का मनोहर है वह रसिक जन का निरतिशय सुख प्रदान करें ॥ २८ ॥

सखे ! इन कोकिलों का कैसा सुमधुर रब है ॥ २६ ॥

बिदू—भो बयस्य ! तुम्हारा वंशीरब इस से मधुर है एवं हमारा कण्ठरब वंशीरब से भी अति मनोहर है। अतः तुम

वंशीबादन करो मैं भी कण्ठध्वनि करता हूँ ॥ ३० ॥
श्रीकृष्ण—जैसी तुम्हारी अभिरुचि। (एसा कह कर वंशी बजाने लगे) ॥३१॥
बिदू—तुम्हारा वंशीरव सुना है अब मेरा कण्ठरब एकबार सुनो। (ऐसा कह कर विकट मुख कर कठोर चित्कार) ॥३२॥ (वृक्षाग्रभाग में दृष्टि निक्षेप कर) सखे देखो देखो, हमारी जीत हुई। जो दासीपुत्र कोकिल गण तुम्हारी वंशीध्वनि से अपने को पराजित मान कर छिपे हुये थे बे सब हमारे कण्ठ-नाद को श्रवणकर कौन कहाँ पलायन कर गये। अतः हे सखे! तुम्हारे गर्व का कारण नहीं रहा ॥ ३३ ॥
कृष्ण—सखे! देखो देखो, किसी निर्दयव्यक्ति ने इन सब अशोक-पल्लवों को भग्न किया है, जिस को देख कर मेरे हृदय व्यथित हो रहा है ॥ ३४ ॥
बिदू—वयस्य! मैंने सुना है कि दासीपुत्री गोपिकायें यहाँ आ-कर पुष्पचयन करती हैं, (सपरिहास) हाँ मैंने जान लिया कि इसी कारण तुम बृन्दाबन नहीं त्यागते हो ॥३५॥
(नेपथ्य में) वृन्दाबन में बिहरण-शील मधुसूदन की मुरलीध्वनि का कर्णाञ्जलि से पान कर श्रीराधा का कन्दर्प जाग्रत हो गया है। वह इसलिये गाढ़ लज्जा का त्याग कर कौतुहल बश सखी-मण्डली में प्रवेश किया ॥ ३६ ॥

श्रीराधिका आज क्षण क्षण में कामवाधा से आक्रान्ता हो कर मृदु पवन से चञ्चलायमान कमल की भाँति चारों ओर दृष्टि-पात करती हुई मृदु मन्थर मत्त गजराज गति से क्रीड़ा कानन में प्रवेश कर रही है। श्रीरामानन्दराय बिरचित यह सङ्गीत गजपति प्रताप-रुद्र के चित्त को आनन्दित करें ॥ ३७ ॥

बिदू—( कर्ण लगाकर ) अहे! मैंने भली भाँति जान ली।
कृष्ण—क्या जाना ?
बिदू—हमें क्या पूछते हो।
( सखीगण के साथ श्री राधा, मदनिका एवं बनदेवी प्रवेश करती हैं )

बिदू—( आगे देख कर ) बयस्य! देखो देखो, किसी इन्द्रजालिक ( मायावी ) ने ये समस्त स्वर्ण-पुत्तलियाँ छोड़ दी हैं, जो कि इधर आरही हैं। अतः यहाँ से एक लेकर पलायन करूँ। सखे! मैं दरिद्र ब्राह्मण हूँ, एक की प्राप्ति से कृतार्थ हो जाऊँगा। ( एसा कह कर धरने के लिये चलने लगा )
कृष्ण—धिक् मूर्ख ! यह कनक-पूत्तलिका समूह नहीं है परन्तु गोपीसमूह है।

बिदू—( स्थिर हो कर हास्य वदन से ) बयस्य! अच्छा निश्चय किया है, तुम्हारा बृन्दाबन आना सफल हुआ।
कृष्ण—अरे मूर्ख! हमारा वृन्दाबन आने में क्या फल हुआ है ? ॥ ४१ ॥

बिदू—सखे ! इन समस्त दासी–पुत्रि गोपिकाओं से ही इस बृन्दाबन के नवीन पल्लव समूह प्रतिपालित हो रहे हैं एसा ही कह रहा हूँ ॥ ४२ ॥

राधा—( सन्मुख देख कर ) आर्य्ये मदनिके! कहो तो वह सुकोमल नीलोत्पलकान्ति-बाला पुरुष कौन है ? जो कि सुबर्ण-राशि समान वस्त्र परिधान कर अपने कन्ध देश में ईषत् अबलम्बित वंशी का मधुर मधुर बजा रहा है॥ ४३॥
मद—सखि ! नहीं जानती हो, मैंने जिस का नाम लिय था वह वही युवा है। युवतियों के चित्त रूप विहंग इन का

वृक्ष ज्ञान से आश्रय कर रहे हैं। इन का नाम मुकुन्द है जो साक्षात् कामदेव रूप में बिराजमान हैं। जिन के नयन गोचर होने पर सुन्दरियों की नीवी उसी क्षण शिथिलता को प्राप्त हो जाती है॥ ४४॥

श्रीकृष्ण—( ईषत् अवलोकन कर मन में )
अहो ! किसी उत्तम बस्तू का शुभ क्षण में उत्पन्न होता है। जैसा कि - इस मृग-नयना के बदन समान कमल वा चन्द्रमा नहीं है तौ भी इन दोनों के अतिरिक्त अन्य कोई भी उपमित नहीं हो सकता है॥ ४६॥

बिदू—सखे ! मैंने जान लिया, इन समस्त दासी-पुत्रि गोपिकाओ के द्वारा तुम उत्कण्ठित हो गये हो अतः आओ इन समस्त गोपिकाओं की दृष्टि पथ से अन्तरित हो कर शिखरिणी-रसाला पान कर अपनो आत्मा का तृप्त करें। देखो, मध्यान्ह हो गया है॥ ४७॥

श्रीकृष्ण—ठीक कह रहे हो। देखो, यह सूर्य्यदेव गगन-मण्डल के मध्यस्थल में बिराजमान होकर अपने श्रान्त घोडेओं को "अहे घोटकगण ! तुम सब इस आकाश मार्ग में भ्रमण कर क्लान्त हो गये हो, अब तुम सब की गति स्खलित हो गई है" एसा कह कर तिरस्कार करने के लिये मानो अपने किरण रूप दोनों बाहु का बिस्तार कर गगन मण्डल का परिमाण निर्द्धार कर रहे हैं॥ ४९॥

बिदू —( संकुचित नेत्र से वहुक्षण पर्य्यन्त गगन के प्रति दृष्टिपात करके ) बयस्य ! मैं भी रविमण्डल का बर्णन करता हूँ। देखो, देवशिल्पी बिश्वकर्म्मा सूर्य्य-मण्डल को चक्रभ्रमि ( कुन्द ) में आरोहित कर घुमाय हैं उस से संस्कार

बस वह अब तक भी घूम रहा है यह मेरा अनुमान है ॥५०॥
मद—( श्रीराधिका के प्रति ) सखि ! वहुक्षण पर्य्यन्त क्रीडा करने से परिश्रान्ता हो गई हो, आओ हम सब गमन करें। ( सब का प्रस्थान )

इति पूर्बराग नामक प्रथमाङ्क समाप्त हुआ



# ❀ अथ द्वितीयाङ्क ❀



[ अनन्तर मदनिका का प्रवेश ]

मद—(आगे को देख कर) क्या यह अशोकमञ्जरा आ रही है ॥१
अशोक— देवि ! बन्दना करती हूँ। काय्यं-भार गृहीत व्यक्ति के समान किस चिन्ता में हो और कहाँ जा रही हो ?
मद—यह वार्त्ता अत्यन्त महती है।
अशोक—कहो तो सही।
मदनिका—वत्से ! तुम नहीं जानती हो कि आज मैं प्रियसखी राधिका को लेकर पुष्पबाटिका में गई थी।
अशोक—उस से क्या हुआ ?।
मद—उस बाटिका में अशोकबृक्ष के नीचे नन्दतनय श्रीकृष्ण बैठे थे। अनायास ही हमारी प्रियसखी राधिका के दृष्टिगोचर हुए।
अशोक—इस में क्या आश्चर्य्य है। काम के बिलास को कौन नहीं प्रकाश करता है ॥८॥
मद—इस में सन्देह क्या है ?
अशोक—आप इस बिषय में क्या कहती हो ?

मद—अयि सरले ! जानती हुई तो भी पूछती हो ।
अशोक—क्या मुकुन्द का इस समय स्मरण है ?
मद—हाँ
अशोक—आपने लज्जा से तरलचित्ता राधिका के मन का भाव कैसे जाना ? ॥१४॥
मद—सुनो, जब तक बिषम-बाण वाला कन्दर्प के हृदय में अबकाश नहीं मिलता है तब तक बाला-रमणियों का हृदय लज्जा कवच से ढका रहता है ॥१५॥
अशोक—अच्छा ? अब श्रीराधिका ने क्या अपने मनोभाव प्रकाश किया है और आपने क्या अनुमान किया ? ॥१६॥
मद—राधिका ने तो कुछ नहीं कहा किन्तु हमने ही अनुमान किया है ॥१७॥
अशोक--वह क्या है ?
मद—वह यह है कि-एक तो चन्द्रमा को देखते ही उस का अनादर कर देती हैं, मदमत्त कोकिल की कंठध्वनि को बड़े प्रेम से सुनती हैं और सखिगण के पूछने पर विपरीत उत्तर देती हैं इसी से उन के हृदय का भाव जाना जाता है ॥१८॥ हाय हाय ! आज राधिका के हृदय में कन्दर्प बिकार का आविर्भाव हो रहा है। शीतल चन्दन, मन्द मलयपबन एवं कोकिल के मधुर स्वर उन के लिये बिपरीत रूप से प्रतीयमान हो रहे हैं। उन बिकारबाधाओं को दूर करने के लिये वह नाना प्रकार उपाय करतीं हैं। कामबाधासे युक्त राधिका अभिनव समस्त भावों का प्राप्ति होने पर अत्यन्त खेदान्वित हो गई हैं। उन के अबिकल निश्चल नयनों से बार बार जल कण गिर रहे हैं, उनके सम्वरण के लिये वह किसी एक निर्जन स्थान में जाकर

सखियों के प्रति अत्यन्त प्रीति दिखाय रही हैं। रामानन्दराय कवि के द्वारा बर्णित यह संगीत जो कि गजपति प्रतापरुद्र के मनोहर है वह हरिचरण-परायण रसिक समाज में निरन्तर बिहार करे ॥२०॥

मद—अब तुम कहाँ जाती हो।

अशोक—मुझे राधिका ने आज्ञा दी कि हे सखि ! आज हमारी अभिनव कमलदल की शय्या पर शयन करने की इच्छा हो रही है, अतः उनके लिये कोमल कमलदल लाने को जा रही हूँ ॥२२॥

मद—(मन ही मन) अहो पुष्पचाप कन्दर्प क्या निष्ठुर रूप से बिलास कर रहा है। मैंने सुना है श्रीराधा मन्द मलयानिल सम्पर्क से कोकिल एवं भ्रमर के शब्द से अत्यन्त मदनातुर हो गई हैं। उन्होंने एकान्त में अपनी शशिमुखी से गद्गद् वाक्यों से कहा ॥२३॥

हे शशिमुखि ! अन्य सखियों से छिपाकर तुम बिकशित शतदल कमलों की एक उत्कृष्ट-शय्या शीघ्र निर्माण करो। वह शयन-गृह अभिनव कमल-दलों से युक्त हों एवं उस में पबन का मन्द मन्द संचार होय। तुम इस बासना का पूर्ण करो, कबिबर रामानन्दराय के बिरचित यह संगीत गजपति प्रताप-रुद्र के चित्त में सुख प्रदान करे॥२४॥

मद—वत्से ! तुम जाओ तुम्हारा ये कार्य्य मंगलप्रद होवें। मैं भी मुकुन्द के पास जाती हूँ ॥२५॥

अशोक—देवि ! मैं प्रणाम करती हूँ ! (ऐसा कह कर प्रस्थान) ॥२६॥

मद—(परिभ्रमण करती हुई आकाश की ओर देखकर) अहे ! शुकपक्षिगण ! तुम सब जानते हो ? कहाँ पर श्रीकृष्ण का दर्शन

मिलेगा ? क्या कहते हो, श्रीकृष्ण शशिमुखी के साथ भाण्डीर-बन में निबास कर रहे हैं। मैंने ही वहाँ पर शशिमुखी को नियुक्त किया है (एसा कह कर) पक्षिगण ! तुम क्या कहते हो–तुम कहाँ जाती हो ? मैं वहाँ जाकर गुप्तरूप से उनके सम्पूर्ण वृत्तान्त सुनूँगी। (यह कह कर प्रस्थान) ॥२७॥

[विष्कम्भक–अर्थात् भूत-भविष्यत बस्तूका अंशसूचक] ॥२८॥

[ शशिमुखी तथा श्रीकृष्ण का प्रवेश ]

कृष्ण––आओ आओ।

शशि—(कामलेखा का अर्पण करती है)

कृष्ण—(पढ़ने लगे) यथा–

हे प्राणबल्लभ ! तुम हमारे हृदय में दृढभाव से कामबाण बेध कर रहे हो। बह दुर्यश बलवान् कन्दर्प ढूढ़ने पर भी कहीं नहीं मिलता है, केवल समस्त दिशाओं में तुम ही दृष्टि-गोचर होते हो ॥२९॥

कृष्ण—(मन ही मन) अहो ! यह अनुराग चरमाबस्था को प्राप्त हो गया है। अतः औदास्य प्रकट कर उसके हृदयस्थ भावनिष्ठा का अवलोकन करूँ। (भाव गोपन कर प्रकाश्य रूप से) यह मदननामक व्यक्ति कौन है ? बह यहाँ पर क्यों आया है, ? सुलोचना राधिका ने उस का क्या अपराध किया है जिस से बह उसके हृदय को निर्दय रूप में व्यथित कर रहा है। क्या बह कंस का कोई दूत है (ऐसा कह कर अभिमान के साथ) वह दुरात्मा कहाँ है उस से बोल दो, आज में अपनी दोनों भुजाओं से मर्दन पूर्वक इस अबला बाला की रक्षा कर सुस्थिर करूँगा। बड़ी आश्चर्य्य की बात है, मेरे वर्तमान ही में व्रज-स्त्रियों का इतना भय ॥३०॥

